गब्भं दुहंदुहेणं परिवहाति। तस्स णं दारगस्स गब्भगयस्स चेव अट्ठ णालीओ अब्भंतरप्पवहाओ, अट्ठ नालीओ बाहिरप्पवहाओ, अट्ठ पूयप्पवहाओ, अट्ठ सोणियप्पवहाओ, दुवे दुवे कण्णंतरेसु, दुवे २ अच्छिंतरेसु, दुवे २ नक्कंतरेसु दुवे २ धमणिअंतरेसु अभिक्खणं २ पूयं च सोणियं च परिस्सवमाणीओ २ चेव चिट्ठंति। तस्स णं दारगस्स गब्भगयस्स चेव अग्गिए नामं वाही पाउब्भूते। जे णं से दारए आहारेति से णं खिप्पामेव विद्धंसमागच्छति, पूयत्ताए य सोणियत्ताए य परिणमति। तंपि य से पूयं च सोणियं च आहारेति।

अट्ठ नालीउ' त्ति अष्टौ नाड्यः शिराः। 'अब्भंतरप्पवहाउ' त्ति शरीरस्याभ्यन्तर एव रुधिरादि स्रवन्ति यास्तास्तथोच्यन्ते। 'बाहिरप्पवहाउ' त्ति शरीराद् बहिः पूयादि क्षरन्ति यास्तास्तथोक्ताः। एता एव षोडश विभज्यन्ते—अट्ठेत्यादि। कथमित्याह—'दुवे दुवे' त्ति द्वे पूयप्रवहे द्वे च शोणितप्रवहे। ते च क्वेत्याह 'कण्णंतरेसु' श्रोत्ररन्ध्रयोः, एवमेताश्चतस्रः, एवमन्या अपि व्याख्येयाः, नवरं धमन्यः कोष्ठकहड्डान्तराणि। 'अग्गिए' त्ति अग्निको भस्मकाभिधानो वायुविकारः।

४, तदा श्रान्ता तान्ता परितान्ताऽकामाऽस्वयंवशा तं गर्भं दुःखदुःखेन परिवहति। तस्य दारकस्य गर्भगतस्यैवाष्ट नाड्योऽभ्यन्तरप्रवहाः, अष्ट नाड्यो बहिष्प्रवहाः, अष्ट पूयप्रवहाः, अष्ट शोणितप्रवहाः, द्वे द्वे कर्णान्तरयोः, द्वे २ अक्ष्यन्तरयोः, द्वे २ नासान्तरयोः, द्वे धमन्यन्तरयोरभीक्ष्णं २ पूयं च शोणितं परिस्रवन्त्यः २ तिष्ठन्ति। तस्य दारकस्य गर्भगतस्यैवाग्निको नाम व्याधिः प्रादुर्भूतः। यत् स दारक आहरति तत्क्षिप्रमेव विध्वंसमागच्छति, पूयतया शोणिततया च परिणमति। तदपि च स पूयं च शोणितं चाहरति।

तते णं सा मियादेवी अण्णया कयाती णवण्हं मासाणं बहुपडिपुण्णाणं दारगं पयाया जातिअंधे जाव आगितिमिते। तते णं सा मियादेवी तं दारयं हुंडं अंधारूवं पासति २ त्ता भीया ४ अम्मधातिं सद्दावेति २ त्ता एवं वयासी,—'गच्छह णं देवा० तुमं एयं दारगं एगंते उक्कुरुडियाए उज्झाहि'। तते णं सा अम्मधाती मियाए देवीए तहत्ति एतमट्ठं पडिसुणेति २ त्ता जेणेव विजए खत्तिए तेणेव उवागच्छइ २ त्ता करयलपरिग्गहियं जाव एवं वयासी;—' एवं खलु सामी ! मियादेवी नवण्हं जाव आगितिमित्ते, तते णं सा मियादेवी तं हुंडं अधं पासति २ त्ता भीया ममं सद्दावेति २ त्ता एव वयासी,

'जाइअंधे' इत्यत्र यावत्करणात् "जाइमूए" इत्यादि दृश्यम्। 'हुंड'ति अव्यवस्थिताङ्गावयवम्। 'अंधारूवं'त्ति अन्धकाकृतिम्। 'भीया' इत्येतद् दृश्यम्—" तत्था उव्विग्गा संजायभया" भयप्रकर्षाभिधानायैकार्थाः शब्दाः। 'करयल'—इत्यत्र "करयलपरिग्गहियं दसणहं अंजलिं मत्थए कट्टु" इत्यादि दृश्यम्। 'नवण्हं' इत्यत्र "मासाणं बहुपडिपुण्णाणं" इत्यादि दृश्यम्, तथा "जाइअंधं" इत्यादि च।

ततः सा मृगादेव्यन्यदा कदाचिद् नवसु मासेषु बहुपरिपूर्णेषु दारकं प्रजाता जात्यन्धं यावदाकृतिमात्रम्। ततः सा मृगादेवी तं दारकं हुण्डमन्धकरूपं पश्यति, दृष्ट्वा भीता ४ अम्बाधात्री शब्दयति, शब्दयित्वैवमवादीत्,—'गच्छ त्वं देवा० एतं दारकमेकान्तेऽशुचिराशावुज्झ'। ततः सा अम्बाधात्री मृगाया देव्याः 'तथा' इत्येतमर्थं प्रतिश्रृणोति। प्रतिश्रुत्य यत्रैव विजयः क्षत्रियस्तत्रैवोपागच्छति। उपागत्य करतलपरिगृहीतं यावदेवमवदत्;—'एवं खलु स्वामिन्। मृगादेवी नवसु यावदाकृतिमात्रं, ततः सा मृगादेवी तं हुण्डमन्धं पश्यति।

‘गच्छ ३ णं तुमं देवा० एयं दारगं एगंते उक्कुरुडियाए उज्झाहि’; तं संदिसह णं सामी ! तं दारगं अहं एगंते उज्झामि उदाहु मा ?’ तते णं से विजए तीसे अम्म० अंतिते सोच्चा तहेव संभंते उट्ठाते उट्ठेति, उट्ठेत्ता जेणेव मियादेवी तेणेव उवागच्छाति २ मियं देविं एवं वयासी; ‘देवाणु० तुज्झं पढमगब्भे, तं जइ णं तुमं एयं एगंते उक्कुरुडियाए उज्झसि, तो णं तुज्झ पया नो थिरा भविस्संति; तेणं तुमं एयं दारगं रहस्सियंसि भूमीघरंसि रहस्सितेणं भत्तपाणेणं पडिजागरमाणी २ विहराहि, तो णं तुज्झ पया थिरा भविस्संति’। तते णं सा मियादेवी विजयस्स खत्तियस्स तहत्ति एयमट्ठं विणएणं पडिसुणेति २ त्ता तं दारगं रह० भूमि-

‘संभंते’त्ति उत्सुकः। ‘उट्ठाए उट्ठेइ’त्ति ऊर्ध्वस्थानेनोत्तिष्ठति। ‘पय’त्ति प्रजा अपत्यानि। ‘रहस्सियंसि’ राहस्यिके विजन इत्यर्थः। ‘पुरा पोराणाणं’ति पुरा पूर्वकाले ‘कृतानाम्’ इति गम्यम्, अत एव पुराणानां चिरन्तनानाम्, इह च यावत्करणात् “दुचिन्नाणं दुप्पडिकंताणं”

दृष्ट्वा भीता ४ मां शब्दयति शब्दयित्वैवमवदत्, ‘गच्छ, ३त्वं देवा० एतं दारकमेकान्तेऽशुचिराशावुज्झ’ तत् संदिशत स्वामिन् ! तं दारकमहमेकान्त उज्झामि उताहो मा ?’ ततः स विजयस्तस्या अम्बा० अन्तिकात् श्रुत्वा तथैव संभ्रान्त उत्थायोत्तिष्ठति। उत्थाय यत्रैव मृगादेवी तत्रैवोपागच्छति, उपागत्य मृगां देवीमेवमवदत्,—‘देवानु० तव प्रथमगर्भः, तद् यदि त्वमेतमेकान्तेऽशुचिराशावुज्झसि, ततस्तव प्रजा नो स्थिरा भविष्यन्ति, तेन त्वमेत दारकं राहस्यिके भूमिगृहे राहसिकेन भक्तपानेन प्रतिजागरयन्ती २ विहर, ततस्तव प्रजाः स्थिरा भविष्यन्ति, । ततः सा मृगादेवी विजयस्य क्षत्रियस्य ‘तथा’ इत्येतमर्थं विनयेन प्रतिशृणोति, प्रतिश्रुत्य तं दारकं राहस्यिके भूमीगृहे राहसिकेन भक्तपानेन

घर० भत्त० पडिजागरमाणी विहरति । एवं खलु गोतमा ! मियापुत्ते दारए पुरा पोराणाणं जाव पच्चणुभवमाणे विहरति ६ ।'

मियापुत्ते णं भंते ! दारए इओ कालमासे कालं किच्चा कहिं गमिहिति ? कहिं उववज्जिहिति ?' 'गोतमा ! मियापुत्ते दारए छव्वीसं वासातिं परमाउयं पालइत्ता कालमासे कालं किच्चा इहेव जंबुद्दीवे २ भारहे वासे वेयड्ढगिरिपायमूले सीहकुलंसि सीहत्ताए पच्चायाहिति । से णं तत्थ सीहे भविस्सति अहम्मिए जाव साहसिते, सुबहुं पावं कम्मं समज्जिणाति । से २ कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीए उक्कोससागरोवमट्ठिईएसु जाव उववज्जिहिति । से णं ततो अणंतरं उव्वट्टित्ता सरीसवेसु

इत्यादि "पावगं फलवित्तिविसेसं" इत्यन्तं द्रष्टव्यम् । 'अहम्मिए' इत्यत्र यावत्करणादिदं दृश्यम्—"बहुनगरनिग्गयजसे सूरे दढप्पहारी" इति, व्यक्तं च । 'कालमासे'त्ति मरणावसरे । 'सागरो० जाव'त्ति 'सागरोवमट्ठिइएसु नेरइएसु नेरइयत्ताए' द्रष्टव्यम् ।

प्रतिजागरयन्ती विहरति । एवं खलु गौतम ! मृगापुत्रो दारकः पुरा पुराणानां यावत् प्रत्यनुभवन् विहरति' । 'मृगापुत्रो भदन्त ! दारक इतः कालमासे कालं कृत्वा कुत्र गमिष्यति ? कुत्रोपपत्स्यते ?' 'गौतम ! मृगापुत्रो दारकः षड्विंशतिं वर्षाणि परमायुः पालयित्वा कालमासे कालं कृत्वेहैव जम्बूद्वीपे २ भारते वर्षे वैताढ्यगिरिपादमूले सिंहकुले सिंहतया प्रत्यायास्यति । स तत्र सिंहो भविष्यति

उववाज्जिहिति । तत्थ णं कालं किच्चा दोच्चाए पुढवीए उक्कोसियाए तिन्निसागरोवमट्ठिई उववज्जिहिति । से णं ततो अणंतरं उव्वट्टित्ता पक्खिसु उववाज्जिहिति । तत्थवि कालं किच्चा तच्चाए पुढवीए सत्तसागरो० । ततो सीहेसु । तयाणंतरं चउत्थीए । उरगो । पंचमीए । इत्थी । छट्ठीए । मणुओ । अहे सत्तमाए । तत्तो अणंतरं उव्वट्टित्ता से जाइं इमाइं जलयरपंचिंदियातिरिक्खजोणियाणं मच्छकच्छभगाहमगरसुंसुमारादीणं अद्धतेरसजातिकुलकोडीजोणिपमुहसतसहस्साइं, तत्थ णं एगमेगंसि जोणीविहाणंसि अणेगसयसहस्सक्खुत्तो उद्दाइत्ता २ तत्थेव भुज्जो २ पच्चायाइस्सति । से णं ततो उव्वट्टित्ता एवं चउप्पएसु, उरपरिसप्पे-

'जाइकुलकोडीजोणिप्पमुहसयसहस्साइं' त्ति जातौ पञ्चेन्द्रियजातौ कुलकोटीनां योनिप्रमुखानि योनिद्वारकाणि यानि शतसहस्राणि तानि तथा । 'जोणीविहाणंसि' त्ति योनि भेदे । 'खलीणमट्टियंति खलीनामाकाशस्थां छिन्नतटोपरिवर्तिर्नी मृत्तिकामिति । 'उम्मुक्क० जाव' त्ति 'उम्मुक्कबालभावे विण्णाय परिणयमित्ते जोव्वणमणुपत्ते' इति दृश्यम्,

---

अधार्मिको यावत् साहसिकः, सुबहु पापं कर्म यावत् समर्जयिष्यति । स तत्र कालमासे कालं कृत्वाऽस्यां रत्नप्रभायां पृथिव्यामुत्कृष्टसागरोपमस्थितिकेषु यावदुपपत्स्यते । स ततोऽनन्तरमुद्वृत्य सरीसृपेषूपपत्स्यते । तत्र कालं कृत्वा द्वितीयायां पृथिव्यामुत्कृष्टतया त्रिसागरोपमस्थितिषूपपत्स्यते । स ततोऽनन्तरमुद्वृत्य पक्षिषूपपत्स्यते । तत्रापि कालं कृत्वा तृतीयायां पृथिव्यां सप्तसागरो० । ततः सिंहेषु । तदनन्तरं पञ्चम्याम् । स्त्री । षष्ठ्याम् । मनुजः । अधः सप्तम्याम् । ततोऽनन्तरमुद्वृत्य स यानीमानि जलचरपञ्चेन्द्रियतिर्यग्योनिकानां मत्स्यकच्छपग्रा-

सु, भुयपरिप्सपसु, खहयरेसु, चउरिंदिएसु, तेइंदिएसु, बेइंदिएसु, वणप्फतिकडुयरुक्खेसु कडुयदुद्धिएसु
वाउ० तेउ० आउ० पुढवि० अणेगसतसहस्सक्खुत्तो०। से णं ततो अणंतरं उव्वट्टित्ता सुपतिट्ठपुरे [नगरे]
गोणत्ताए पच्चायाहिति। से णं तत्थ उम्मुक्कबालभावे अण्णया कयाती पढमपाउसंसि गंगाए महाणदीए
खलीणमट्टियं खणमाणे तडीए पेल्लिते समाणे कालगते तत्थेव सुपइट्ठपुरे [ नगरे ] सिट्ठिकुलंसि पुत्त-
त्ताए पच्चायाइस्साति। से णं तत्थ उम्मुक्क० जाव जोव्वणमणुप्पत्ते तहारूवाणं थेराणं अंतिए

तत्र विज्ञ एव विज्ञकः, स चासौपरि णतमात्रश्च बुद्ध्यादिपरिमाणपन्न एव च विज्ञकपरिणतमात्रः। 'अणतरं चयं चइत्त' त्ति
अनन्तरं शरीरं त्यक्त्वा च्यवनं वा कृत्वा। 'जहा दढपइण्णे' त्ति औपपातिके यथा दृढप्रतिज्ञाभिधानो भव्यो वर्णितस्तथाऽयमपि

हसकरसुंसुमारादीनामर्धत्रयोदशजातिकुलकोटियोनिप्रमुखशतसहस्राणि, तत्रैकैकस्मिन् योनिविधानेऽनेकशतसहस्रकृत्वो मृत्वा २ तत्रैव भूयो
भूयः प्रत्यायास्यति। स तत उद्वृत्यैवं चतुष्पदेषु, उरःपरिसर्पेषु, भुजपरिसर्पेसु, खचरेषु, चतुरिन्द्रियेषु, त्रीन्द्रियेषु, द्वीन्द्रियेषु, वनस्पति-
कटुकवृक्षेषु, कटुकदुग्धेषु, वायुषु, तेजस्सु, अप्सु, पृथिवीष्वनेकशतसहस्रकृत्वः०। स ततोऽनन्तरमुद्वृत्य सुप्रतिष्ठपुरे नगरे गोतया प्रत्या-
यास्यति। स तत्रोन्मुक्तबालभावोऽन्यदा कदाचित् प्रथमप्रावृषि गङ्गाया महानद्याः खलीनमृत्तिकां खनंस्तट्या प्रेरितः सन् कालगतस्तत्रैव
सुप्रतिष्ठपुरे नगरे श्रेष्ठिकुले पुत्रतया प्रत्यायास्यति स तत्रोन्मुक्त० यावद् योवनमनुप्राप्तस्तथारूपाणां स्थविराणामन्तिके धर्मं श्रुत्वा निशम्य
मुण्डो भूत्वाऽगारादनगारतां प्रव्रजिष्यति। स तत्रानगारो भविष्यतीर्यासमितो यावद् ब्रह्मचारी। स तत्र बहूनि वर्षाणि श्रामण्यपर्यायं

धम्मं सोच्चा निसम्म मुंडे भवित्ता अगाराओ अणगारियं पवइस्सति । से णं तत्थ अणगारे भविस्सति इरियासमिते जाव बंभयारी । से णं तत्थ बहूइं वासाइं सामण्णपरियागं पाउणित्ता आलोइयपडिक्कंते समाहिपत्ते कालमासे कालं किच्चा सोहम्मे कप्पे देवत्ताए उववज्जिहिति । से णं ततो अणंतरं चयं चइत्ता महाविदेहे वासे जाइं कुलाइं भवंति अड्ढाइं० जहा दढपतिण्णे, सा चेव वत्तवया कलाउ जाव सिज्झिहिति ।'

'एवं खलु जम्बू ! समणेणं भगवता महावीरेणं जाव संपत्तेणं दुहविवागाणं पढमस्स अज्झयणस्स अयमट्ठे पण्णत्ते' त्ति बेमि ( सू० ७ ) ॥ १ ॥ ॥ पढमं अज्झयणं समत्तं ॥

---

वाच्यः। कस्मादेवमित्याह–' सा चेव' त्ति सैव दृढप्रतिज्ञसंबन्धिनी अस्यापि वक्तव्यतेति । तामेव स्मरयन्नाह–'कलाउ' त्ति कलास्तेन ग्रहीष्यन्ते दृढप्रतिज्ञेनेव, यावत्करणाच्च प्रव्रज्याग्रहणादि तस्येवास्य वाच्यं यावत् 'सेत्स्यति' इत्यादि पदपञ्चकमिति, तत्र सेत्स्यति–कृतकृत्यो भविष्यति, भोत्स्यते–केवलज्ञानेन सकलज्ञेयं ज्ञास्यति, मोक्ष्यति–सकलकर्मविमुक्तो भविष्यति, परिनिर्वास्यति–सकलकर्मकृतसंतापरहितो भविष्यति, किमुक्तं भवति ? सर्वदुःखानामन्तं करिष्यतीति ॥ ॥ इति प्रथमाध्ययनविवरणम् ॥

---

पालयित्वाऽऽलोचितप्रतिक्रान्तः समाधिप्राप्तः कालमासे काल कृत्वा सौधर्मे कल्पे देवतयोपपत्स्यते । स ततोऽनन्तरं शरीरं त्यक्त्वा महाविदेहे वर्षे यानि कुलानि भवन्त्याढ्यानि यथा दृढप्रतिज्ञः, सैव वक्तव्यता, कला यावत् सेत्स्यति' । 'एवं खलु जम्बो ! श्रमणेन भगवता महावीरेण यावत् सम्प्राप्तेन दुःखविपाकानां प्रथमस्याध्ययनस्यायमर्थः प्रज्ञप्तः ' इति ब्रवीमि ॥ ॥ प्रथमाध्ययनं समाप्तम् ॥

## ॥ अथ-उज्झितकाख्यं द्वितीयमध्ययनम् ॥

जति णं भंते! समणेण जाव संपत्तेणं दुहविवागाणं पढमस्स अज्झयणस्स अयमट्ठे पण्णत्ते, दोच्चस्स णं भंते! अज्झयणस्स दुहविवागाणं समणेणं जाव० संपत्तेणं के अट्ठे पण्णत्ते? तते णं से सुहम्मे अणगारे जंबू अणगारं एवं वयासी,–'एवं खलु जम्बू! तेणं कालेणं तेणं समएणं वाणियग्गामे णामं नगरे होत्था रिद्धि०। तस्स णं वाणियग्गामस्स उत्तरपुरत्थिमे दिसीभाए दूतिपलासे नामं उज्जाणे होत्था। तत्थ णं दूइपलासे सुहम्मस्स जक्खस्स जक्खायतणे होत्था। तत्थ णं वाणियग्गामे मित्ते नामं राया होत्था। वण्णओ। तत्थ णं मित्तस्स रण्णो सिरी नामं देवी होत्था। वण्णओ। तत्थ णं वाणियग्गामे कामज्झया णामं गणिया होत्था अहीण० जाव सुरूवा, बावत्तरीकलापंडिया, चउसट्ठिगणियागुणोववेया,

---

यदि भदन्त! श्रमणेन यावत्संप्राप्तेन दुःखविपाकानां प्रथमस्याध्ययनस्यायमर्थः प्रज्ञप्तः, द्वितीयस्य भदन्त! अध्ययनस्य दुःखविपाकानां श्रमणेन यावत् संप्राप्तेन कोऽर्थः प्रज्ञप्तः? ततः स सुधर्माऽनगारो जम्बुमनगारमेवमवदत्–'एवं खलु जम्बो! तस्मिन् काले तस्मिन् समये वाणिजग्रामं नाम नगरमभवद्, ऋद्धि०। तस्य वाणिजग्रामस्योत्तरपौरस्त्ये दिग्भागे दूतिपलाशं नामोद्यानमभूत्। तत्र दूतिपलाशे सुधर्मणो यक्षस्य यक्षायतनमभूत्। तत्र वाणिजग्रामे मित्र नाम राजाऽभवत्। वर्णकः तत्र मित्रस्य राज्ञः श्रीर्नाम देव्यभवत्। तत्र वाणिजग्रामे

एकूणतीसविसेसे रममाणी, एक्कवीसरतिगुणप्पहाणा, बत्तीसपुरिसोवयारकुसला, णवंगसुत्तपडिबोहिया, अट्ठारसदेसीभासाविसारया, सिंगारागारचारुवेसा, गीयरतिगंधव्वनट्टकुसला, संगतगत० सुंदरत्थण० ऊसियधया सहस्सलंभा, विदिण्णछत्तचामरवालावियाणिया, कण्णीरहप्पयाया वावि होत्था । बहूणं गणियासहस्साणं आहेवच्चं० जाव विहराति । ( सू० ८ )

द्वितीये किञ्चिल्लिख्यते । 'अहीणे'त्ति अहीणपुण्णपंचिंदियसरीरा इत्यर्थः, यावत्करणात् "लक्खणवंजणगुणोववेया माणुम्माणप्पमाणपडिपुण्णसुजायसव्वंगसुंदरंगी" इत्यादि द्रष्टव्यम्, तत्र लक्षणानि स्वस्तिकादीनि, व्यञ्जनानि मषतिलकादीनि, गुणाः सौभाग्यादयः, मानं जलद्रोणमानता, उन्मानमर्धभारप्रमाणता, प्रमाणमष्टोत्तरशताङ्गुलोच्छ्रयतेति । 'बावत्तरीकलापंडिय'त्ति लेखाद्याः शकुनरुतपर्यन्ता गणितप्रधानाः कलाः प्रायः पुरुषाणामेवाभ्यासयोग्याः, स्त्रीणां तु विज्ञेया एव प्राय इति । 'चउसट्ठिगणियागुणोववेया' गीतनृत्तादीनि (नृत्यादीनि) विशेषतः पण्यस्त्रीजनोचितानि यानि चतुःषष्टिर्विज्ञानानि ते गणिकागुणाः, अथवा, वात्स्यायनोक्तान्यालिङ्गनादीन्यष्टौ वस्तूनि, तानि च प्रत्येकमष्टभेदत्वाच्चतुःषष्टिर्भवन्ति चतुःषष्ट्या गणिकागुणैरुपेता या सा तथा । एकोनत्रिंशद् विशेषाः, एकविंशती रतिगुणाः, द्वात्रिंशच्च पुरुषोपचाराः कामशास्त्रप्रसिद्धाः । 'णवंगसुत्तपडिबोहिय'त्ति द्वे श्रोत्रे, द्वे चक्षुषी, द्वे घ्राणे,

कामध्वजा नाम गणिका बभूव । अहीन० यावत् सुरूपा, द्वासप्ततिकलापण्डिता, चतुःषष्टिगणिकागुणोपेता, एकोनत्रिंशद्विशेष्यां रममाणा, एकविंशतिरतिगुणप्रधाना, द्वात्रिंशत्पुरुषोपचारकुशला, प्रतिबोधितसुप्तनवाङ्गा, अष्टादशदेशीभाषाविशारदा, शृङ्गाराचारुवेषा, गीतरतिगान्धर्वनाट्यकुशला, संगतगत०, सुन्दरस्तन० उच्छ्रितध्वजा, सहस्रलाभा, वितीर्णच्छत्रचामरबालव्यजनिका, कर्णीरथप्रयाता चाप्यभवत् ।

एका जिह्वा, एका त्वक्, एकं च मन इत्येतानि नवाङ्गानि सुप्तानीव सुप्तानि यौवनेन प्र    धितानि स्वार्थग्रहणपटुतां प्रापितानि यस्याः सा तथा। 'अट्ठारसदेसीभासाविसारय'त्ति रूढिगम्यम्। 'सिंगारागारचारुवेस'त्ति शृङ्गारस्य रसविशेषस्यागारमिव चारुवेषो यस्याः सा तथा। 'गीयरइगंधव्वनट्टकुसल'त्ति गीतरतिश्चासौ गन्धर्वनाट्यकुसला चेति समासः, गन्धर्वं नृत्तयुक्तगीतम्, नाट्यं तु नृत्तमेवेति। 'संगयगय'त्ति, "संगयगयभणियविहियविलाससललियसंलावनिउणजुत्तोवयारकुसला" इति दृश्यम्-संगतान्युचितानि गीतादीनि यस्याः सा तथा, सललिता प्रसन्नतोपेता ये संलापास्तेषु निपुणा या सा तथा, युक्ताः संगता ये उपचारा व्यवहारास्तेषु कुशला या सा तथा, ततः पदत्रयस्य कर्मधारयः। 'सुंदरथण'त्ति एतेनेदं दृश्यम्—"सुंदरथणजहणवयणकरचरणनयणलावण्णविलासकलिया" इति, व्यक्तम्, नवरं जघनं पूर्वः कटीभागः, लावण्यमाकारस्य स्पृहणीयता, विलासः स्त्रीणां चेष्टाविशेषः। 'ऊसियज्झय'त्ति, ऊर्ध्वीकृतजयपताका। सहस्रलाभेति व्यक्तम्। 'विदिन्नछत्तचामरवालवियणिय'त्ति, वितीर्णं राज्ञा प्रसादतो दत्तं छत्रं च चामररूपा बालव्यजनिका (च) यस्यै सा तथा। 'कन्नीरहपयायावि होत्थ'त्ति, कर्णीरथः प्रवहणं तेन प्रयातं गमनं यस्याः सा तथा, 'वापि' इति समुच्चये, 'होत्थ'त्ति, अभवदिति। 'आहेवच्चं'ति आधिपत्यम्, अधिपतिकर्म, इह यावत्करणादिदं दृश्यम्, पोरेवच्चं' पुरोवर्तित्वमग्रेसरत्वमित्यर्थः, "भट्टित्तं" भर्तृत्वं पोषकत्वम् "सामित्तं" स्वस्वामिसम्बन्धमात्रम्, "महत्तरगत्तं" महत्तरगत्वं शेषवेश्याजनापेक्षया महत्तमताम्, "आणाईसरसेणावच्चं" आज्ञेश्वर आज्ञाप्रधानो यः सेनापतिः सैन्यनायकस्तस्य भावः कर्म वा आज्ञेश्वरसेनापत्यम्, आज्ञेश्वरसेनापत्यमिवाज्ञेश्वरसेनापत्यम्, "कारेमाणा" कारयन्ती परैः, "पालेमाणा" पालयन्ती स्वयमिति। 'अहीण'त्ति अहीणपुन्नपंचिंदियसरीरेति, व्यक्तं च; यावत्करणादिदं दृश्यम्—"लक्खणवंजणगुणोववेए" इत्यादि। 'इंदभूई' इत्यत्र यावत्करणात् "नामं अणगारे गोयमगोत्तेणं" इत्यादि "संखित्तविउलतेयलेसे" इत्येतदन्तं दृश्यम्।

तत्थ णं वाणियग्गामे विजयमित्ते नामं सत्थवाहे परिवसति अड्ढे० । तस्स णं विजयमित्तस्स सुभद्दा नामं भारिया होत्था अहीण० । तस्स णं विजयमेत्तस्स पुत्ते सुभद्दाए भारियाए अत्तए उज्झितए नामं दारए होत्था अहीण० जाव सुरूवे । तेणं कालेणं तेणं समएणं समणे भगवं महावीरे समोसढे । परिसा निग्गता । राया निग्गओ जहा कूणिओ निग्गओ । धम्मो कहिओ । परिसा राया य पडिगओ । तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जेट्ठे अंतेवासी इदंभूती० जाव लेसे छट्ठंछट्ठेणं जहा पण्णत्तीए पढमाए०

' छट्ठंछट्ठेणं जहा पन्नत्तीए ' त्ति यथा भगवत्यां तथेदं वाच्यम्, तच्चैवम्, " छट्ठंछट्ठेणं अणिक्खित्तेणं तवोकम्मेणं अप्पाणं भावेमाणे विहरइ, तए णं से भगवं गोयमे छट्ठक्खमणपारणगंसि " ' पढमाए ' इत्यत्र यावत्करणादिदं दृश्यम्,—" पढमाए पोरिसीए सज्झायं करेति, बीयाए पोरिसीए झाणं झियाति, तइयाए पोरिसीए अतुरियमचवलमसंभंते मुहपोत्तियं पडिलेहेति, भायणवत्थाणि पडिलेहेति, भायणाणि पमज्जति, भायणाणि उग्गाहेति, जेणेव समणे भगवं महावीरे तेणेव उवागच्छति २ समणं ३ वंदति २ एवं वयासी,—' इच्छामि णं भंते ! तुब्भेहिं अब्भणुण्णाते छट्ठक्खम-

बहूनां गणिकासहस्राणामाधिपत्यं० यावद् विहरति । तत्र वाणिजग्रामे विजयमित्रो नाम सार्थवाहः परिवसत्याढ्यः । तस्य विजयमित्रस्य सुभद्रा नाम भार्याऽभवद्—अहीन० । तस्य विजयमित्रस्य पुत्रः सुभद्राया भार्याया आत्मज उज्झितको नाम दारकोऽभवद्—अहीन० यावत् सुरूपः । तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः समवसृतः । परिषद् निर्गता । राजा निर्गतो यथा कूणिको निर्गतः । धर्मः कथितः । परिषद् राजा च प्रतिगतः । तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य ज्येष्ठोऽन्तेवासीन्द्रभूतिर्यावत्० लेश्यः षष्ठषष्ठेन यथा प्रज्ञप्तौ

जाव जेणेव वाणियग्गामे तेणेव उवा० । वाणियग्गामे उच्चणीय० अडमाणे जेणेव रायमग्गे तेणेव ओगाढे । तत्थ णं वहवे हत्थी पासति सण्णद्धवद्धवम्मियगुडिते उप्पीलियकच्छे उद्दामियघंटे णाणामणिरयणविविहगेविज्जउत्तरकंचुइज्जे पडिकप्पिते झयपडागवरपंचामेलआरूढहत्थारोहे गहिया-उहपहरणे । अण्णे य तत्थ वहवे आसे पासति सण्णद्धवद्धवम्मियगुडिते आविद्धगुडे ओसारियपक्खरे

णपारणगंसि वाणियग्गामे णगरे उच्चणीयमज्झिमाइं कुलाइं घरसमुदाणस्स भिक्खायरियाए अडित्तए' गृहेषु भिक्षार्थं भिक्षाचर्यया भिक्षासमाचारेण अटितुमिति वाक्यार्थः, "अहा सुहं देवाणुप्पिया ! मा पडिवंधं" स्खलनां मा कुर्वित्यर्थः, तए णं भगवं गोयमे समणेणं २ अब्भणुण्णाते समाणे समणस्स २ अंतियातो पडिनिक्खमति अतुरियमचवलमसंभंते जुगंतरपलोयणाते दिट्ठीए पुरओरियं सोहेमाणे" इति । 'सन्नद्धवद्धवम्मियगुडिए' त्ति संनद्धाः सन्नहत्या कृतसन्नाहाः तथा, बद्धं वर्म त्वक्त्राणविशेषो येषां ते वद्धवर्माणस्त एव वद्धवर्मिकाः, तथा, गुडा महांस्तनुत्राणविशेषः सा संजाता येषां ते गुडितास्ततः कर्मधारयोऽतस्तान् । 'उप्पी-लियकच्छे' त्ति उत्पीडिता गाढतरं वद्धा कक्षा उरोवन्धनं येषां ते तथा तान् । 'उद्दामियघंटे' त्ति उद्दामिता अपनीतवन्धनाः

प्रथमायां० यावद् यत्रैव वाणिजग्रामं तत्रैवोपा० । वाणिजग्रामे उच्चनीच० अटन् यत्रैव राजमार्गस्तत्रैवावगाढः । तत्र बहून् हस्तिनः पश्यति सन्नद्धवद्धवर्मिकगुडितान् उत्पीडितकक्षान् उद्दामितघण्टान् नानामणिरत्नविविधग्रैवेयकोपरकञ्चुकितान् प्रतिकल्पितान् ध्वजपताकावरपञ्चा-पीडाऽऽरूढहस्त्यारोहान् गृहीतायुधप्रहरणान् । अन्यांश्च तत्र बहूनश्वान् पश्यति सन्नद्धवद्धवर्मिकगुडितान् आविद्धगुडान् अवसारिततनुत्राणान्

उत्तरकंचुइय—ओचूल मुहचंडाधर—चामरथासकपरिमंडियकडीए आरूढअस्सारोहे गहियाउहपहरणे। अण्णे य तत्थ बहवे पुरिसे पासति सण्णद्धबद्धवम्मियकवए उप्पीलियसरासणपट्टीए पिणद्धगेवेज्जे विमलवरबद्धचिंधपट्टे गहियाउहपहरणे। तेसिं च णं पुरिसाणं मज्झगयं पुरिसं पासति अवओडग-

अलम्बिता इत्यर्थः घण्टा येषां ते तथा तान्। 'णाणामणिरयणविविहगेविज्जउत्तरकंचुईज्जे' त्ति नाना मणिरत्नानि, विविधानि ग्रैवेयकाणि ग्रीवाभरणानि, उत्तरकञ्चुकाश्च तनुत्राणविशेषाः सन्ति येषां ते तथा। अत एव 'पडिकप्पि ए' त्ति कृतसन्नाहादिसामग्रीकान्। 'झयपडागवरपंचामेलआरूढहत्थारोहे' ध्वजा गरुडादिध्वजाः पताका गरुडादिवर्जितास्ताभिर्वरा ये ते, तथा, पञ्च आमेलकाः शेखरका येषां ते, तथा, आरूढा हस्त्यारोहा महामात्रा येषु ते तथा, ततः पदत्रयस्य कर्मधारयः अतस्तान्। 'गहियाउहप्पहरणे' गृहीतान्यायुधानि प्रहरणार्थं येषु, अथवा, आयुधानि अक्षेप्याणि, प्रहरणानि तु क्षेप्याणीति। 'सन्नद्धबद्धवम्मियगुडियए' त्ति, एतदेव व्याख्याति—'आविद्धगुडे ओसारियपक्खरे' त्ति, आविद्धा परिहिता गुडा येषां ते तथा, गुडा च यद्यपि हस्तिनां तनुत्राणे (णं) रूढा, तथापि देशविशेषापेक्षयाऽश्वानामपि संभवतीति, अवसारिता अवलम्बिताः पक्खरास्तनुत्राणविशेषायेषां ते तथा, तान्। 'उत्तरकंचुइयंओचुलमुहचंडाधरचामरथासगपरिमंडियकडीए' त्ति उत्तरकञ्चुकस्तनुत्राणविशेष एव

उत्तरकञ्चुकिताऽवचूलकमुखचण्डधर—चामरस्थासकपरिमण्डितकटीकान् आरूढाश्वारोहान् गृहीतायुधप्रहरणान्। अन्यांश्च तत्र बहून् पुरुषान् पश्यति सन्नद्धबद्धवर्मितकवचान् उत्पीडितशरासनपट्टिकान् पिनद्धग्रैवेयकान् विमलवरबद्धचिह्नपट्टान् गृहीतायुधप्रहरणान्। तेषां

वंधणं उक्कित्तकण्णनासं नेहत्तुप्पियगत्तं बज्झकरकडिजुयनियत्थं ( च्छं ) कंठे गुणरत्तमल्लदामं चुण्णगुंडियगातं चुण्णयं वज्झपाणपीयं तिलं तिलं चेव छिज्जमाणं काकणिमंसाइं खावियंतं पावं कक्करसएहिं

येषामस्ति ते तथा, तथा अवचूलकैर्मुखं चण्डाधरं रौद्राधरौष्ठं येषां ते तथा, तथा चामरैः स्थासकैश्च दर्पणैः परिमण्डिता कटी येषां ते तथा, ततः कर्मधारयोऽतस्तान्। 'उप्पीलियसरासणपट्टीए' त्ति उत्पीडिता कृत प्रत्यञ्चारोपणाच्छरासनपट्टिका धनुर्यष्टिर्बाहुपट्टिका वा यैस्ते तथा तान्। 'पिणद्धगेवेज्जे' त्ति पिनद्धं परिहितं ग्रैवेयकं यैस्ते तथा तान्। 'विमलवरबद्धचिंधपट्टे' त्ति विमलो वरो बद्धश्चिह्नपट्टो नेत्रादिमयो यैस्ते तथा तान्। 'अवओडगबंधणं' त्ति अवकोटकेन कृकाटिकाया अधोनयनेन बन्धनं यस्य स तथा तम्। 'उक्कित्तकण्णनासं' ति उत्पाटितकर्णनासिकम्। 'नेहत्तुप्पियगत्तं' त्ति स्नेहस्नेहितशरीरम्। 'बज्झकरकडिजुयनियत्थं' ति, वध्यश्चासौ करयोर्हस्तयोः कट्यां कटीदेशे युगं युग्मं निवसित इव निवसितश्चेति समासोऽतस्तम्, अथवा, वध्यस्य यत्करकटिकायुगं निन्द्यचीवरिकाद्वयं तद् निवसितो यः स तथा तम्। 'कंठे गुणरत्तमल्लदामं' कण्ठे—गले गुण इव कण्ठसूत्रमिव रक्तं लोहितं मल्लदाम पुष्पमाला यस्य स तथा तम्। 'चुण्णगुंडियगायं' गैरिकक्षोदावगुण्डितशरीरम्। 'चुन्नयं' ति संत्रस्तम्। 'वज्झपाणपीयं' ति वध्या बाह्या वा प्राणा उच्छ्वासादयः प्रतीताः प्रिया यस्य स तथा तम्। 'तिलं तिलं चेव छिज्जमाणं' ति, तिलशश्छिद्यमानमित्यर्थः 'कागणिमंसाइं खावियंतं' काकणीमांसानि तद्देहोत्कृत्त्हस्वमांसखण्डानि खाद्यमानम्। 'पावं' ति पापिष्ठम्।

च पुरुषाणां मध्यगतं पुरुषं पश्यति अवकोटकबन्धनमुत्कृत्तकर्णनासं स्नेहस्नेहितगात्रं वध्यकरकटीयुगनिवसितं कण्ठे गुणरक्तमाल्यं चूर्णगुण्डि-

हम्ममाणं अणेगनरनारिसंपरिवुडं चच्चरे चच्चरे खंडपडहएणं उग्घोसिज्जमाणं। इमं च णं एयारूवं उग्घोसणं सुणेति,—' नो खलु देवाणुप्पिया ! उज्झियगस्स दारगस्स केई राया वा रायपुत्ते वा अवरज्झति; अप्पणो से सयाइं कम्माइं अवरज्झंति ' ( सू० ९ ) तते णं से भगवओ गोतमस्स तं पुरिसं पासित्ता इमे अज्झत्थिते ५,—' अहो णं इमे पुरिसे जाव निरयपडिरूवियं वेयणं वेदेति ' त्ति कट्टु

' खक्खरसएहिं हम्ममाणं ' ति खर्खरा अश्वोत्त्रासनाय चर्ममया वस्तुविशेषाः स्फुटितवंशा वा तैर्हन्यमानं ताड्यमानम् । ' अप्पणो से सयाइं ति आत्मन आत्मीयानि ' से ' तस्य स्वकानि स्वकृतानि । ' अज्झत्थिए ' आत्मगतः; इहेदमन्यदपि दृश्यम्,—" कप्पिए " कल्पितो भेदवान्, कल्पिको वा उचितः, "चिंतिए" स्मृतिरूपः, " पत्थिए " प्रार्थितो भगवदुत्तरप्रार्थनाविषयः; "मणोगए"ति अप्रकाशित इत्यर्थः, "संकप्पो" विकल्पः " समुप्पज्जित्था " समुत्पन्नवान् । " अहो णं इमे पुरिसे पुरा पोराणाणं दुच्चिन्नाणं दुप्पडिक्कंताणं असुभाणं पावाणं कडाणं कम्माणं पावगं फलवित्तिविसेसं पच्चणुब्भवमाणे विहरइ, न मे दिट्ठा नरगा वा नेरइया वा, पच्चक्खं खलु अयं पुरिसे निरयपडिरूवियं वेयणं वेएइत्ति कट्टु " इत्येतत् प्रथमाध्ययनोक्तं वाक्यमाश्रि-

तगात्रं संत्रस्तं वध्यप्रीतप्राण तिलं तिलमिव च्छिद्यमानं काकणीमांसानि खाद्यमानं पापं कर्करतैर्हन्यमानमनेकरनारीसंपरिवृत चत्वरे चत्वरे खण्डपटहेनोद्घोष्यमाणम् । इदं चैतद्रूपमुद्घोषणं शृणोति,—'नो खलु देवानुप्रियाः ! उज्झितके दारके कश्चिद् राजा वा राजपुत्रो वाऽपराध्यति, आत्मनस्तस्य स्वकानि कर्माण्यपराध्यन्ति ।' ततस्तस्य भगवतो गौतमस्य तं पुरुषं दृष्ट्वाऽयमाध्यात्मिकः ४,—'अहो अयं

वाणियग्गामे णगरे उच्चनीयकुले० जाव अडमाणे अहापज्जत्तं समुयाणं गेण्हति, २त्ता वाणियग्गामं नगरं मज्झं मज्झेणं० जाव पडिदंसंति; समणं भगवं महावीरं वंदति णमंसति २ एवं वयासी,–' एवं खलु अहं भंते ! तुब्भेहिं अब्भणुण्णाते समाणे वाणियग्गामे तहेव जाव० वेएति; से णं भंते ! पुरिसे पुव्वभवे के आसि० ? जाव पच्चणुभवमाणे विहरति ? '।

'एवं खलु गोतमा ! तेणं कालेणं तेणं समएणं इहेव जंबुद्दीवे २ भारहे वासे हत्थिणाउरे नामं नयरे होत्था रिद्धि० । तत्थ णं हत्थिणाउरे णगरे सुणंदे नामं राया होत्था महयाहि०। तत्थ णं हत्थि-

त्याधिकृताक्षराणि गमनीयानीति । 'रिद्ध'त्ति "रिद्धत्थिमियसमिद्धे" इत्यादि दृश्यं, तत्र ऋद्धं भवनादिभिर्वृद्धिमुपगतम्, स्तिमितं भयवर्जितम्, समृद्धं धनादियुक्तमिति । ' मंहयाहि'त्ति इह "महयाहिमवंतमलयमंदिरमहिंदसारे" इत्यादि दृश्यम्, तत्र महाहिमव-

पुरुषो यावद् निरयप्रतिरूपां वेदनां वेदयति' इति कृत्वा वाणिजग्रामे नगर उच्चनीचकुले० यावदटन् यथापर्याप्तं समुदानं ( भैक्ष्यं ) गृह्णाति; गृहीत्वा, वाणिजग्रामस्य नगरस्य मध्य मध्येन० यावत् प्रतिदर्शयति, श्रमणं भगवन्तं महावीरं वन्दते नमस्यति, वन्दित्वानमस्यित्वैवमवादीत्,–' एवं खल्वहं भदन्त ! युष्माभिरभ्यनुज्ञातः सन् वाणिजग्रामे तथैव यावद्० वेदयति; स भदन्त ! पुरुषः पूर्वभवे क आसीत्० यावत् प्रत्यनुभवन् विहरति ? '

एवं खलु गोतम ! तस्मिन् काले तस्मिन् समये इहेव जम्बूद्वीपे २ ( द्वीपे ) भारते वर्षे हस्तिनापुरं नाम नगरमभवद् ऋद्ध० ।

णाउरे नगरे वहुमज्झदेसभाए एत्थ णं महं एगे गोमंडवे होत्था अणेगखंभसयसंनिविट्ठे पासाइ ४ ० तत्थ णं वहवे णगरगोरूवाणं सणाहा य अणाहा य णगरगावीओ य णगरवलीवद्दा य णगरपड्डियाओ य णगरवसभा य पउरतणपाणिया निव्भया निरुवसग्गा (विग्गा) सुहं सुहेण परिवसंति । तत्थ णं हत्थिणाउरे नगरे भीमे नामं कूडग्गाहे होत्था अधम्मिए जाव दुप्पडियाणंदे । तस्स णं भीमस्स कूडग्गाहस्स

---

दाद्यः पर्वतास्तद्वत् सारः प्रधानो यः स तथा। 'पासा' इत्यत्र "पासाइए दरिसणिज्जे अभिरूवे पडिरूवे" त्ति दृश्यम्; तत्र प्रासादीयो मनःप्रसन्नताहेतुः दर्शनीयो यं पश्यच्चक्षुर्न श्राम्यति, अभिरूपः अभिमतरूपः, प्रतिरूपः द्रष्टारं २ प्रति रूपं यस्येति। 'नगरवलीवद्दा' इत्यादौ वलीवर्दा वर्धितगवाः, 'पड्डिका' ह्रस्वमहिष्यो ह्रस्वगोस्त्रियो वा, वृषभाः साण्डगवः। 'कूडग्गाहे' त्ति कूटेन जीवान् गृह्णातीति कूटग्राहः। 'अहम्मिए' त्ति धर्मेण चरति व्यवहरति वा धार्मिकस्तन्निषेधादधार्मिकः, यावत्करणादिदं दृश्यम्–अधम्माणुए" अधर्मान् पापलोकान् अनुगच्छतीत्यधर्मानुगः "अधम्मिट्ठे" अतिशयेनाऽधर्मो धर्मरहितोऽधर्मिष्ठः, "अधम्मक्खाई" अधर्मभाषणशीलः, अधार्मिकप्रसिद्धिको वा, "अहम्मपलोई" अधर्मानेव परसंबन्धिदोषानेव प्रलोकयति प्रेक्षत इत्येवंशीलोऽधर्मप्रलोकी, "अहम्म-

---

तत्र हस्तिनापुरे नगरे सुनन्दो नाम राजा वभूव महाहि० । तत्र हस्तिनापुरे नगरे वहुमध्यदेशभागेऽत्र महानेको गोमण्डपो वभूवानेकस्तम्भशतसंन्निविष्टःप्रासादीयः ४ । तत्र वहवो नगरगोरूपाः सनाथाश्चानाथाश्च नगरगव्यश्च नगरवलीवर्दाश्च नगरपड्डिकाश्च नगरवृषभाश्च प्रचुरतृणपानीया निर्भया निरुपसर्गाः (निरुद्विग्नाः) सुखं सुखेन परिवसन्ति । तत्र हस्तिनापुरे नगरे भीमो नाम कूटग्राहो वभूव, अधार्मिको

उप्पला नामं भारिया होत्था अहीण०। तते णं सा उप्पला कूडग्गाहिणी अण्णया कयाति आवण्णसत्ता जाया यावि होत्था। तते णं तीसे उप्पलाए कूडग्गाहिणीए तिण्हं मासाणं बहुपडिपुण्णाणं अयमेयारूवे दोहले पाउब्भूते,—'धण्णाओ णं ताओ अम्मयाओ ४ जाव सुलद्धे जम्मजीवियफले, जाओ णं बहूणं नगरगोरूवाणं सणाहाण य ५ जाव वसभाण य ऊहेहि य थणेहि य वसणेहि य छप्पाहि य

पलज्जणे" अधर्म एव हिंसादौ प्ररज्यतेऽनुरागवान् भवतीत्यधर्मप्ररजनः, "अहम्मसमुदाचारे" अधर्मरूपः समुदाचारः समाचारो यस्य स तथा, "अहम्मेण चेव वित्तिं कप्पेमाणे" इति अधर्मेण पापकर्मणा वृत्तिं जीविकां कल्पयमानः कुर्वाणस्तच्छील इत्यर्थः "दुस्सीले" दुष्टशीलः, "दुव्वए" अविद्यमाननियम इति, "दुप्पडियाणंदे" दुष्प्रत्यानन्दो बहुभिरपि संतोषकारणैरनुत्पद्यमानसंतोष इत्यर्थः। 'अहीण'त्ति "अहीणत्तपुण्णपंचिंदियसरीरा" इत्यादि दृश्यम्। 'आवन्नसत्त'त्ति गर्भे समापन्नजीवेत्यर्थः। धन्नाओ णं ताओ 'अम्मयाउ' त्ति अम्बा जनन्यः, इह यावत्करणादिदं दृश्यम्,—" पुण्णाओ णं ताओ अम्मयाओ, कयत्थाओ णं ताओ अम्मयाओ, कयलक्खणाओ णं ताओ अम्मयाओ, तासिं णं अम्मयाणं सुलद्धे जम्माजीवियफले " इति, व्यक्तं च 'ऊहेहि य' त्ति गवादीनां

यावद् दुष्प्रत्यानन्दः। तस्य भीमस्य कुटग्राहस्योत्पला नाम भार्याऽभवद्—अहीन०। ततः सोत्पला कुटग्राही अन्यदा कदाचिदापन्नसत्त्वा जाता चाप्यभवत्। ततस्तस्या उत्पलायाः कुटग्राह्यास्त्रिषु मासेषु बहुपरिपूर्णेष्वयमेतद्रूपो दोहदः प्रादुर्भूतः, 'धन्यास्ता अम्बाः ४ यावत् सुलब्धम् जन्मजीवितफलम्, या बहूनां नगरगोरूपाणां सनाथानां च ५ यावद् वृषभाणां चोधोभिश्च स्तनैश्च वृषणैश्च पुच्छैश्च ककुदैश्च वहैश्च

ककुहेहि य वहेहि य कन्नेहि य अच्छीहि य नासाहि य जिब्भाहि य ओट्ठेहि य कंबलेहि य सोल्लेहि य तलितेहि य भज्जितेहि य परिसुक्केहि य लावणिएहि य सुरं च मधुं च मेरगं च जातिं च सीधुं च पसण्णं च आसाएमाणीओ विसाएमाणीओ परिभाएमाणीओ परिभुंजेमाणीओ दोहलं विणेंति, तं जइ णं अहमवि बहूणं नगर० जाव विणेज्जामि' त्ति कट्टु तंसि दोहलंसि अविणिज्जमाणंसि सुक्खा भुक्खा निम्मंसा

स्तनोपरिभोगैः। 'थणेहि य' त्ति व्यक्तम्। 'वसणेहि य' त्ति वृषणैरण्डैः। 'छ(छे)प्पाहि य' त्ति पुच्छैः। ककुहेहि य' त्ति ककुदैः स्कन्धशिखरैः' 'वहेहि य' त्ति वहैः स्कन्धैः। कर्णादीनि व्यक्तानि। 'कंबलेहि य' त्ति सास्नाभिः। 'सोल्लिएहि य' त्ति पक्वैः। 'तलिएहि य' त्ति स्नेहेन पक्वैः ' भज्जिएहि य' त्ति भृष्टैः। 'परिसुक्खेहि य' त्ति स्वतः शोषमुपागतैः। 'लावणिएहि य' त्ति, लवणसंस्कृतैः। सुरा तन्दुलधवादिच्छल्लीनिष्पन्ना। मधु च माक्षिकनिष्पन्नम्। मेरकं तालफलनिष्पन्नम्। जातिश्च जातिकुसुमवर्णं मद्यमेव। सिधु च गुडधातकीसंभवम्। प्रसन्ना द्राक्षादिद्रव्यजन्या मनःप्रसत्तिहेतुरिति। 'आसाएमाणीउ' त्ति ईषत् स्वादयन्त्यो बहु च त्यजन्त्य इक्षुखण्डादेरिव। 'विसाएमाणीउ' त्ति विशेषेण स्वादयन्त्योऽल्पमेव त्यजन्त्यः खर्जूरादेरिव। परिभाएमाणीउ' त्ति ददत्यः। 'परिभुंजेमाणीउ' त्ति सर्वमुपभुञ्जाना अल्पमप्यपरित्यजन्त्यः। शुष्का शुष्केव शुष्का रुधिरक्षयात्। 'भुक्ख' त्ति भोजनाकरणाद् हीनबलतया बुभुक्षायुक्तेव बुभुक्षा।

कर्णैश्चाक्षिभिश्च नासाभिश्च जिह्वाभिश्चौष्ठैश्च कम्बलैश्च पक्वैश्च स्नेहपक्वैश्च भृष्टैश्च परिशुष्कैश्च लावणिकैश्च सुरां च मधु च मेरकं च जातिं च सीधु च प्रसन्नां चास्वादन्त्यो विस्वादयन्त्यः परिभाजयन्त्यः परिभुञ्जाना दोहदं विनयन्ति; तद् यद्यहमपि बहूनां नगर० यावद्

उलुग्गा उलुग्गसरीरा नित्तेया दीणविमणवयणा पंडुल्लयियमुही ओमंथियनयणवयणकमला जहोइयं पुप्फवत्थगंधमल्लालंकारहारं अपरिभुंजमाणी करयलमलियव्व कमलमाला ओहय० जाव झियाति। इमं च णं भीमे कूडग्गाहे जेणेव उप्पला कूडग्गाहिणी तेणेव उवा० २ ओहय० जाव पासति २ त्ता एवं वयासी,—'किण्णं तुमं देवाणुप्पिए ओहय० जाव झियासि ?, तते णं सा उप्पला भारिया भीमं कूड०

अत एव निर्मांसा। 'उलुग्ग'त्ति अवरुग्णा भग्नमनोवृत्तिः' 'उलुग्गसरीरा' भग्नदेहा 'नित्तेय'त्ति गतकान्तिः, 'दीणविमणहीण'त्ति दीना दैन्यवती विमनाः शून्यचित्ता हीणा च भीतेति कर्मधारयः 'दीणविमणवयण'त्ति पाठान्तरम्, तत्र विमनस इव विगतचेतस इव वदनं यस्याः सा तथा, दीना चासौ विमनोवदना चेति समासः। 'पंडुल्लइयमुही' पाण्डुरीभूतवदनेत्यर्थः। 'ओमंथियनयणवयणकमल'त्ति ओमंथियत्ति अधोमुखीकृतानि नयनवदनरूपाणि कमलानि यया सा तथा 'ओहय'त्ति ओहयमणसंकप्पा विगतयुक्तायुक्तविवेचनेत्यर्थः, इह यावत्करणादिदं दृश्यम्,—"करतलपल्हत्थमुही" करतले पर्यस्तं निवेशितं मुखं यया सा तथा, "अट्टज्झाणोवगया

विनयामि' इति कृत्वा तस्मिन् दोहदेऽविनीयमाने शुष्का बुभुक्षा निर्मांसाऽवरुग्णाऽवरुग्णशरीरा निस्तेजस्का दीनविमनोवदना पाण्डुरितमुखी अवमथितनयनवदनकमला यथोचितं पुष्पवस्त्रगन्धमाल्यालङ्कारहारमपरिभुञ्जाना करतलमर्दितेव कमलमालाऽपहत० यावद् ध्यायति। इतश्च भीमः कूटग्राहो यत्रैवोत्पला कूटग्राही तत्रैवोपा० २ अपहत० यावत् पश्यति, दृष्ट्वैवमवदत्, 'किं त्वं देवानुप्रिये ! अपहत० यावद्० ध्यायसि ?' ततः सोत्पला भार्या भीमं कूटग्राहमेवमवादीत्,—'एवं खलु देवानुप्रिय ! मम त्रिपु मासेपु बहुपरिपूर्णेपु दोहदः

द्वितीये— उज्झि० उत्पला० दोहदव०

एवं वयासी, एवं खलु देवाणुप्पिया ! ममं तिण्हं मासाणं बहुपडिपुण्णाणं दोहले पाउब्भूते,—'धण्णा णं ४ जाओ णं वहूणं गो० ऊहेहि य० लावणिएहि य० सुरं च० ५ आसा० ४ दोहलं विणिंति'। तते णं अहं देवाणु० तंसि दोहलंसि अविणिज्जमाणंसि० जाव ज्झियामि।' तते णं से भीमे कूड० उप्पलं भारियं एवं वयासी,—'मा णं तुमं देवाणु० ओहय० जाव ज्झियाहि; अहं णं तं तहा करिस्सामि (करिहामि) जहा णं तव दोहलस्स संपत्ती भविस्सइ'। ताहिं इट्ठाहिं ५ जाव समासासेति।

तते णं से भीमे कूड० अड्ढरत्तकालसमयंसि एगे अबीए सण्णद्ध० जाव पहरणे सयाओ गिहाओ

---

भूमीगयदिट्ठीया"। 'ज्झियाइ'त्ति ध्यायति चिन्तयतीति। 'इमं च णं'ति इतश्चेत्यर्थः। भीमे कूडग्गाहे जेणेव उप्पला कूडगाही तेणेव उवागच्छति' उवागच्छित्ता उप्पलकूडग्गाहिं ओहयमणसंकप्प' इत्यादिसूत्रं प्रागुक्तसूत्रानुसारेण परिपूर्णं कृत्वा ध्येयम्, सूचामात्रत्वा-

---

प्रादुर्भूतः,—'धन्याः ४ या वहूनां गो० ऊधोभिश्च० लावणिकैश्च० सुरां च० ५ आस्वा० ४ दोहदं विनयन्ति'। ततोऽहं देवानुप्रिय ! तस्मिन् दोहदेऽविनीयमाने० यावद् ध्यायामि' ततः स भीमः कूट० उत्पलां भार्यामेवमवदत्,—'मा त्वं देवानुप्रिये ! अपहत० यावद् ध्यामीः, अहं तत् तथा करिष्यामि यथा तव दोहदस्य संप्राप्तिर्भविष्यति। ताभिरिष्टाभिर्यावत् ५ समाश्वासयति।

ततः स भीमः कूटग्राहोऽर्धरात्रसमय एकोऽद्वितीयः संनद्ध० यावत् प्रहरणः स्वस्माद् गृहान्निर्गच्छति, निर्गत्य हस्तिनापुरं मध्येन०

निग्गच्छति २ हत्थिणाउरं मज्झंमज्झेणं० जेणेव गोमंडवे तेणेव उवागते २ बहूणं णगरगोरूवाणं जाव वसभाण य अप्पेगइयाणं ऊहे छिंदति जाव अप्पेगइयाणं कंबलए छिंदति, अप्पेगइयाणं अण्णमण्णाइं अंगोवंगाइं वियंगेति २ जेणेव सए गिहे तेणेव उवागच्छति २ उप्पलाए कूडग्गाहिणीए उवणेति। तते णं सा उप्पला भारिया तेहिं बहूहिं गोमंसेहिं सोल्लेहिं जाव सुरं च ५ आसा० ४ तं दोहलं विणेति। तते णं सा उप्पला कूडग्गाही संपुण्णदोहला संमाणियदोहला विणीयदोहला वोच्छिण्णदोहला संपन्नदोहला

तपुस्तकस्य। 'ताहिं इट्ठाहिं' इत्यत्र पञ्चकलक्षणादङ्कादिदं दृश्यम्,–"कंताहिं पियाहिं मणुन्नाहिं मणामाहिं" इति, एकार्थाश्चैते, "वग्गु" इति वाग्भिः। 'एगे'त्ति सहायताभावात्। 'अबीए'त्ति धर्मरूपसहायाभावात्। 'सन्नद्धबद्धवम्मियकवए' पूर्ववत् यावत्करणात् "उप्पीलि-यसरासणपट्टीए" इत्यादि "गहियाउहपहरणे" इत्येतदन्तं दृश्यम्। 'संपुण्णदोहल'त्ति समस्तवाञ्छितार्थपूरणात् 'सम्माणियदोहल'त्ति वाञ्छितार्थसमानयनात्। 'विणीयदोहल'त्ति, वाञ्छाविनयनात्। 'विच्छिन्नदोहल'त्ति विवक्षितार्थवाञ्छानुबन्धविच्छेदात्। 'संप-न्नदोहल'त्ति विवक्षितार्थभोगसंपाद्यानन्दप्राप्तेरिति। 'भीया' इत्यत्र "तत्था तसिया संजायभया" इति दृश्यम्, भयोत्कर्षप्रतिपादनपरा-

यत्रैव गोमण्डपस्तत्रैवोपागतः, उपागत्य बहूनां नगरगोरूपाणां यावद् वृषभाणां चाप्येकेषामूधांसि च्छिनत्ति यावद् अप्येकेषां कम्बलांश्छि-नत्ति, अप्येकेषामन्यान्यान्यङ्गोपाङ्गानि विकृन्तति, विकृत्य यत्रैव स्वं गृहं तत्रैवोपागच्छति, उपागत्योत्पलायै कूटग्राही उपनयति। ततः सोत्पला भार्या तैर्बहुभिर्गोमांसैः पक्वैर्यावत् सुरां च ५ आस्वा० ४ तं दोहदं विनयति। ततः सोत्पला कूटग्राही संपूर्णदोहदा "संमानित-

तं गब्भं सुहंसुहेणं परिवहति। तते णं सा उप्पला कूड० अण्णया कयाती णवण्हं मासाणं वहुपडिपुण्णाणं दारगं पयाता। तते णं तेणं दारएणं जायमेत्तेणं चेव महया सद्देणं विग्घुट्ठे चिच्चीसरे आरसिते। तते णं तस्स दारगस्स आरसियसद्दं सोच्चा निसम्म हत्थिणाउरे णगरे वहवे नगरगोरूवा जाव वसभा य भीया ४ उव्विग्गा सव्वओ समंता विप्पलाइत्था। तते णं तस्स दारगस्स अम्मापियरो अयमेयारूवं नामधेज्जं करेंति; जम्हा णं अम्हं इमेणं दारएणं जायमेत्तेणं चेव महया २ सद्देणं विग्घुट्ठे चिच्चीसरे आरासिते, तते णं एयस्स दारगस्स आरासितसद्दं सोच्चा निसम्म हत्थिणाउरे णगरे वहवे णगरगोरूवा य जाव

ण्येकार्थिकानि चैतानि। 'सवओ'त्ति सर्वदिक्षु। 'समंत'त्ति विदिक्षु चेत्यर्थः। 'विपलाइत्थ'त्ति विपलायितवन्त इति 'अयमेयारूव'त्ति, इदमेवंप्रकारं वक्ष्यमाणस्वरूपमित्यर्थः। 'महया महया चिचि आरसिए'त्ति महता २ चिच्चीत्येवं चीत्कारेणेत्यर्थः। 'आरसिय'त्ति आरसितमारटितम्। 'सोच'त्ति, आकर्ण्य। 'निसम्म'त्ति, अवधार्य।

दोहदा विनीतदोहदा व्युच्छिन्नदोहदा संपन्नदोहदा त गर्भं सुखं सुखेन परिवहति। ततः सोत्पला कूट० अन्यदा कदाचिद् नवसु मासेपु वहुपरिपूर्णेषु दारकं प्रजाता। ततस्तेन दारकेण जातमात्रेणैव महता शब्देन विघुष्टश्चिच्चीस्वर आरसितः। ततस्तस्य दारकस्यारसितशब्दं श्रुत्वा निशम्य हस्तिनापुरे नगरे वहवो नगरगोरूपा यावद् वृषभाश्च भीताः ४ उद्विग्नाः सर्वतः समंताद् विपलायांचक्रिरे। ततस्तस्य दारकस्याम्वापितराविदमेतद्रूपं नामधेयं कुरुतः, यस्मादावयोरनेन दारकेण जातमात्रेणैव महता २ शब्देन विघुष्टश्चिचीस्वर आरसितः, तत एतस्य दारकस्यारसितशब्दं श्रुत्वा निशम्य

भीया ४ सव्वतो समंता विप्पलाइत्था, तम्हा णं होउ अम्हं दारए गोत्तासए नामेणं। तते णं से गोत्तासे दारए उम्मुक्कबालभावे जाव जाते यावि होत्था। तते णं से भीमे कूडग्गाहे अण्णया कयाती कालधम्मुणा संजुत्ते। तते णं से गोत्तासे दारए बहूणं मित्तणाइणियगसयणसंबंधिपरिजणेणं सद्धिं संपरिवुडे रोअमाणे कंदमाणे विलवमाणे भीमस्स कूडग्गाहस्स नीहरणं करेति, (नीहरणं) करेत्ता बहूइं लोइयमयकिच्चाइं करेति।

तते णं से सुनंदे राया गोत्तासं दारयं अण्णया कयाती सयमेव कूडग्गाहित्ताए ठवेति। तते णं से गोत्तासे दारए कूडग्गाहे जाए यावि होत्था अहम्मिए जाव दुप्पडियाणंदे। तते णं से गोत्तासे दारए कूडग्गाहे (हित्ताए) कल्लाकल्लिं अद्धरत्तकालसमयंसि एगे अबीए सण्णद्ध-

हस्तिनापुरे नगरे बहवो नगरगोरूपाश्च यावद् भीताः ४ सर्वतः समन्ताद् विपलायांचक्रिरे, तस्माद् भवत्वावयोर्दारको गोत्रासो नाम्ना। ततः स गोत्रासो दारक उन्मुक्तबालभावो यावज्जातश्चाप्यभवत्। ततः स भीमः कूटग्राहोऽन्यदा कदाचित् कालधर्मेण संयुक्तः। ततः स गोत्रासो दारको बहुना मित्रज्ञातिनिजकस्वजनसंबन्धिपरिजनेन सार्धं संपरिवृतो रुदन् क्रन्दन् विलपन् भीमस्य कूटग्राहस्य निस्सरणं करोति। कृत्वा बहूनि लौकिकमृतकृत्यानि करोति।

ततः स सुनन्दो राजा गोत्रासं दारकमन्यदा कदाचित् स्वयमेव कूटग्राहतायां स्थापयति। ततः स गोत्रासो दारकः कूटग्राहो जातश्चाप्यभवदधार्मिको यावद् दुष्प्रत्यानन्दः। ततः स गोत्रासो दारकः कूटग्राहः प्रतिदिनमर्धरात्रकालसमये एकोऽद्वितीयः संनद्धबद्धकवचो यावद्

वद्धकवए जाव गहियाउहपहरणे सयातो गिहातो निज्जाति; जेणेव गोमंडवे तेणेव उवा० बहूणं णगरगोरूवाणं सणा० जाव वियंगेति २ जेणेव सए गिहे तेणेव उवा० । तते णं से गोत्तासे कूड० तेहिं बहूहिं गोमंसेहि सोल्लेहिं जाव सुरं च ५ आसा० ४ विहरति । तते णं से गोत्तासे कूड० एयकम्मे प्प० वि० स० सुबहुं पावं कम्मं समज्जिणित्ता पंचवाससयाइं परमाउं पालयित्ता अट्टदुहट्टोवगते कालमासे कालं किच्चा दोच्चाए पुढवीए उक्कोसं तिसागरो० णेरइयत्ताए उववण्णे । ( सू० ११ ) तते णं सा विजयमेत्तस्स सत्थवाहस्स सुभद्दा भारिया जातनिंदुया यावि होत्था । जाया जाया

'एयकम्मे' इत्यत्रेदं दृश्यम्,—"एयप्पहाणे एयविज्जे एयसमायारे" इति । 'अट्टदुहट्टोवगए'त्ति आर्त्तमार्त्तध्यानं, दुर्घट—दुःखस्थगनीयं दुर्वार(र्य)मित्यर्थः, उपगतः प्राप्तो यः स तथा । 'जायनिंदुया यावि'त्ति जातान्युत्पन्नान्यपत्यानि निर्द्रुतानि निर्यातानि मृतानीत्यर्थो यस्याः सा जातनिर्द्रुता; चापीति समर्थनार्थः ।

---

गृहीतायुध प्रहरणः स्वस्माद् गृहाद् निर्याति, यत्रैव गोमण्डपस्तत्रैवोपा० बहूनां नगरगोरूपाणां सनाथानां यावद् विकृन्तति, विकृत्य यत्रैव स्वं गृहं तत्रैवोपा० । तत' स गोत्रासः कूट० तैर्बहुभिर्गोमांसैः पक्वैर्यावत् सुरां च ५ आस्व० ४ विहरति। ततः स गोत्रासः कूट० एतत्कर्मा प्र० (एतत्प्रधानः) वि० (एतद्विद्यः) स० (एतत्समाचारः) सुबहु पापं कर्म समर्ज्य पञ्चवर्षशतानि परमायुः पालयित्वाऽऽर्तदुःखार्त्तोपगतः कालमासे कालं कृत्वा द्वितीयायां पृथिव्यामुत्कृष्टत्रिसागरो० नैरयिकतयोपपन्नः। ततः सा विजयमित्रस्य सार्थवाहस्य सुभद्रा भार्या जातनिद्रुता चाप्यभवत्।

दारगा विनिहायमावज्जंति। तते णं से गोत्तासे कूड० दोच्चाओ पुढवीओ अणंतरं उव्वट्टित्ता इहेव वाणियग्गामे णगरे विजयमित्तस्स सत्थवाहस्स सुभद्दाए भारियाए कुच्छिंसि पुत्तत्ताए उववण्णे। तते णं सा सुभद्दा सत्थवाही अण्णया कयाइ नवण्हं मासाणं बहुपडिपुण्णाणं दारगं पयाया। तते णं सा सुभद्दा सत्थवाही तं दारगं जातमेत्तयं चेव एगंते उक्कुरुडियाए उज्झावेति २ दोच्चंपि गेण्हावेति २ आणुपुव्वेणं सारक्खमाणी संगोवेमाणी संवड्ढेति। तते णं तस्स दारगस्स अम्मापियरो ठितिपडियं च चंदसूरदंसणं च जागरियं च महया इड्ढिसक्कारसमुदएणं करेति। तते णं तस्स दारगस्स अम्मापितरो

एतदेवाह—जाता जाता दारका विनिघातमापद्यन्ते 'तस्या' इति गम्यम्। 'सारक्खमाणी'ति, अपायेभ्यः। 'संगोवेमाणी'ति वस्त्राच्छादनगर्भगृहप्रवेशनादिभिः। 'ठिइवडियं च'त्ति, स्थितिपतितां कुलक्रमागतां वर्धमानकादिकां पुत्रजन्मक्रियाम्। 'चंदसूरपासणियं'ति, अन्वर्थानुसारिणं तृतीयदिवसोत्सवम्। 'जागरियं च'त्ति, षष्ठीरात्रिजागरणप्रधानमुत्सवम्।

जाता जाता दारका विनिघातमापद्यन्ते। ततः स गोत्रासः कूटग्राहो द्वितीयातः पृथिवीतोऽनन्तरमुद्वृत्त्येहैव वाणिजग्रामे नगरे विजयमित्रस्य सार्थवाहस्य सुभद्राया भार्यायाः कुक्षौ पुत्रतयोपपन्नः। ततः सा सुभद्रा सार्थवाह्यन्यदा कदाचित् नवसु मासेसु बहुपरिपूर्णेषु दारकं प्रजाता। ततः सा सुभद्रा सार्थवाही तं दारकं जातमात्रमेवैकान्तेऽशुचिराशावुज्झयति, उज्झयित्वा द्विरपि (पुनरपि) ग्राहयति, ग्राहयित्वाऽऽनुपूर्व्येण संरक्षन्ती संगोपयन्ती सवर्धयति। ततस्तस्य दारकस्याम्बापितरौ स्थितिपतितां च चन्द्रसूर्यदर्शनं च जागर्यां च महता ऋद्धिसत्कारसमुदयेन कुरुतः।

एक्कारसमे दिवसे निव्वत्ते, संपत्ते बारसाहे अयमेयारूवं गोण्णं गुणनिप्फण्णं नामधेज्जं करेंति, जम्हा णं अम्हं इमे दारए जायमेत्तए चेव एगंते उक्कुरुडियाए उज्झिते, तम्हा णं होउ अम्हं दारए उज्झियए नामेणं। तते णं से उज्झियए दारए पंचधातीपरिग्गाहिते, तंजहा, खीरधातीए १ मज्जण० २ मंडण० ३ कीलाण ४ अंकधातातीए ५ जहा दढपतिण्णे जाव निवायनिव्वाघायगिरिकंदरमल्लीणेव्व चंपयपायवे सुहं सुहेणं विहरति।

तते णं से विजयमित्ते सत्थवाहे अन्नया कयाइ गणिमं च धरिमं च मेज्जं च परिच्छेज्जं च चउव्विहं भंडं (डगं) गहाय लवणसमुद्दं पोयवहणेणं उवागते। तते णं से विजयमित्ते तत्थ लवणसमुद्दे

'गोण्णंगुणनिप्फण्णं'ति, गौणमप्रधानमपि स्यादत उक्तम्—गुणनिष्पन्नमिति। 'जहा दढपइण्णे'ति, औपपातिके यथा दृढप्रतिज्ञो वर्णितस्तथायमपीह वाच्यः। किमवधिकं च तत्र तत्सूत्रमित्याह—यावत् 'निवायनिव्वाघायगिरिकंदरमल्लीणेव्व चंपगपायवे सुहं सुहेणं विहरइ'त्ति। 'लवणसमुद्दे' 'कालधम्मुण'ति मरणेन।

ततस्तस्य दारकस्याम्बापितरावेकादशे दिवसे निर्वृत्ते, सम्प्राप्ते द्वादशाहनीदमेतद्रूपं गौणं गुणनिष्पन्नं नामधेयं कुरुतः, यस्मादावाभ्यामयं दारको जातमात्र एवैकान्तेऽशुचिराशावुज्झितः, तस्माद् भवत्वावयोर्दारक उज्झितको नाम्ना। ततः स उज्झितको दारकः पञ्चधात्रीपरिगृहीतः, तद्यथा, क्षीरधात्र्या मज्जन० मण्डन० क्रीडन०, अङ्कधात्र्या०, यथा दृढप्रतिज्ञो यावद् निर्वातनिर्व्याघातगिरिकन्दरमालीन इव चम्पकपादप. सुखं सुखेन विहरति। ततः स विजयमित्रः सार्थवाहोऽन्यदा कदाचिद् गण्यं च धार्यं च मेयं च परिच्छेद्यं च चतुर्विधं भाण्डं गृहीत्वा लवणसमुद्रं पोतव-

पोतविवत्तिए णिव्वुड्डभंडसारे अत्ताणे असरणे कालधम्मुणा संजुत्ते। तते णं से विजयमित्तं सत्थवाहं जे जहा बहवे ईसरतलवरमाडंवितकोडुंवियइब्भसेट्ठिसत्थवाहा लवणसमुद्दे पोयविवत्तियं (छूढं) निव्वुड्डभंडसारं कालधम्मुणा संजुत्तं सुणेंति, ते तहा हत्थनिक्खेवं च वाहिरभंडसारं च गहाय एगंतं अवक्कमंति। तते णं सा सुभद्दा सत्थवाही विजयमित्तं सत्थवाहं लवणसमुद्दे पोतविवत्तियं णिव्वुड्डभंडसारं कालधम्मुणा संजुत्तं सुणेति २त्ता महया पतिसोएणं अप्फुण्णा समाणी परसुनियत्ताविव चंपगलता

'पोयविवत्तियं' लवणसमुद्रे पोतविपत्तिर्यस्य स तथा तम्, 'निव्वुड्डभंडसारं' निमग्नसारभाण्डमित्यर्थः। 'कालधम्मुणा संजुत्तं'ति मृतमित्यर्थः शृण्वन्ति ते तथेति 'ये यथा' इत्येतदपेक्ष्यम्। 'हत्थनिक्खेवं च'त्ति, हस्ते निक्षेपो न्यासः समर्पणं यस्य द्रव्यस्य तद् हस्तनिक्षेपम्। 'वाहिरभंडसारं च' हस्तनिक्षेपव्यतिरिक्तं च भाण्डसारं सारभाण्डं गृहीत्वा एकान्तं दूरमपक्रामंति–विजयमित्रसार्थवाहभार्यायास्तत्पुत्रस्य च दर्शनं ददति–तदर्थमपहरन्तीति यावत्। परसुनियत्ता इव'त्ति,परशुनिकृत्तेव कुठारच्छिन्नेव 'चम्पकलते'ति।

दनेनोपागतः। ततः स विजयमित्रस्तत्र लवणसमुद्रे पोतविपत्तिको निमग्नभाण्डसारोऽत्राणोऽशरणः कालधर्मेण संयुक्तः। ततस्तं विजयमित्रं सार्थवाहं ये यथा बहव ईश्वरतलवरमाडम्बिककौटुम्बिकेभ्यश्रेष्ठिसार्थवाहा लवणसमुद्रे पोतविपत्तिकं स्पष्टं निमग्नभाण्डसारं कालधर्मेण संयुक्तं शृण्वन्ति, ते तथा हस्तनिक्षेपं च बाह्यभाण्डसारं च गृहीत्वैकान्तमपक्रामन्ति। ततः सा सुभद्रा सार्थवाही विजयमित्रं सार्थवाहं लवणसमुद्रे पोतविपत्तिकं निमग्नभाण्डसारं कालधर्मेण संयुक्तं शृणोति, श्रुत्वा महता पतिशोकेनाक्रान्ता सती परशुनिकृत्तेव चम्पकलता धसेति धरणितले

धसत्ति धरणीतलंसि सव्वंगेहिं संनिवडिया। तते णं सा सुभद्दा सत्थवाही मुहुत्तंतरेणं आसत्था समाणी वहूहिं मित्त० जाव परिवुडा रोयमाणी कंदमाणी विलवमाणी विजयामित्तस्स सत्थवाहस्स लोइयाइं मयकिच्चाइं करेति। तते णं सा सुभद्दा सत्थवाही अण्णया कयाती लवणसमुद्दोत्तरणं च लच्छिविणासं च (सत्थविणासं च) पोतविणासं च पतिमरणं च अणुचिंतेमाणी २ कालधम्मुणा संजुत्ता। (सू० १२)

तते णं ते णगरगुत्तिया सुभद्दं सत्थ० कालगयं जाणित्ता उज्झियगं दारगं सातो गिहातो णिच्छुभंति, णिच्छुभित्ता तं गिहं अण्णस्स दलयंति। तते णं से उज्झियते दारए सयातो गिहातो निच्छूढे

'मित्त' इत्यत्र यावत्करणादिदं दृश्यम्,—"णाइणियगसंबंधि"त्ति, तत्र मित्राणि सुहृदः, ज्ञातयः समानजातयः, निजकाः-पितृव्यादयः, संबन्धिनः-श्वशुरपाक्षिकाः। 'रोयमाणी'ति अश्रूणि मुञ्चन्ती। 'कंदमाणीति' आक्रन्दं महाध्वनिं कुर्वाणा। 'विलवमाणी'ति आर्त्तस्वरं

सर्वाङ्गैः संनिपतिता। ततः सा सुभद्रा सार्थवाही मुहूर्त्तान्तरेणाश्वस्ता सती बहुभिर्मित्र० यावत् परिवृता रुदती क्रन्दन्ती विलपन्ती विजयमित्रस्य सार्थवाहस्य लौकिकानि मृतकृत्यानि करोति। ततः सा सुभद्रा सार्थवाही अन्यदा कदाचिल्लवणसमुद्रावतरणं च लक्ष्मीविनाशं च (सार्थविनाशं च) पोतविनाशं च पतिमरणं चानुचिन्तयन्ती २ कालधर्मेण संयुक्ता।

ततस्ते नगरगौप्तिकाः सुभद्रां सार्थवाहीं कालगतां ज्ञात्वोज्झितकं दारकं स्वस्माद् गृहाद् निष्कासयन्ति, निष्कास्य तद् गृहमन्यस्मै

समाणे वाणियगामे नगरे सिंघाडग० जाव पहेसु जूयखलएसु वेसियाघरएसु पाणागारेसु य सुहं सुहेणं परिवट्टइ (१)। तते णं से उज्झितए दारए अणोहट्टिए अणिवारए सच्छंदमती सइरप्पयारे मज्जप्पसंगी चोरजुयवेसदारप्पसंगी जाते यावि होत्था। तते णं से उज्झियते अण्णया कयाति कामज्झयाए गणियाए सद्धिं संपलग्गे जाते यावि होत्था। कामज्झयाए गणियाए सद्धिं विउलाइं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणे विहरति।

कुर्वती। 'अणोहट्टए'त्ति यो बलाद् हस्तादौ गृहीत्वा प्रवर्त्तमानं निवारयति सोऽपघट्टकस्तदभावादनपघट्टकः, 'अणिवारए'त्ति, निषेधकरहितः, अत एव 'स्वच्छन्दमतिः' स्ववशा स्ववशेन वा मतिरस्येति स्वच्छन्दमतिः। अत एव 'सइरप्पयारे' स्वैरमनिवारिततया प्रचारो यस्य स तथा, 'वेसदारप्पसंगी'ति, वेश्याप्रसङ्गी–कलत्रप्रसङ्गी चेत्यर्थः, अथवा वेश्यारूपा ये दारास्तत्प्रसङ्गीति। 'भोगभोगाइं'ति, भोजनं भोगः–परिभोगः, भुज्यन्त इति भोगाः-शब्दादयो भोगार्हा भोगा भोगभोगा-मनोज्ञाः शब्दादय इत्यर्थः।

दापयन्ति। ततः स उज्झितको दारकः स्वस्माद् गृहाद् निष्कासितः सन् वाणिजग्रामे नगरे शृङ्गाटक० यावत् ०पथेषु द्यूतागारेषु वेश्यागृहेषु पानागारेषु च सुखं सुखेन परिवर्तते। ततः स उज्झितको दारकोऽनपघट्टकोऽनिवारकः स्वच्छन्दमतिः स्वैरप्रचारो मद्यप्रसङ्गी चोरद्यूतवेश्यादारप्रसङ्गी जातश्चाप्यभूत्। ततः स उज्झितकोऽन्यदा कदाचित् कामध्वजया गणिकया सार्धं सम्प्रलग्नो जातश्चाप्यभवत्। कामध्वजया गणिकया सार्धम् विपुलानुदारान्मानुष्यकान् भोगभोगान् भुञ्जानो विहरति।

तते णं तस्स मित्तस्स रण्णो अण्णया कयाइ सिरीए देवीए जोणिसूले पाउब्भूते यावि होत्था। नो संचाएति विजयमित्ते राया सिरीए देवीए सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणे विह-रित्तए। तत्ते णं से विजयमित्ते राया अण्णया कयाती उज्झिययं दारयं कामज्झयाए गणियाए गेहाओ णिच्छुभावेइ, २ त्ता कामज्झयं गणियं अब्भितरियं ठावेति, २ त्ता कामज्झयाए गणिगाए सद्धिं उरालाइं जाव विहराति। तते णं से उज्झियए दारए कामज्झयाए गणियाए गिहातो निच्छुब्भमाणे समाणे कामज्झयाए गणियाए मुच्छिते गिद्धे गढिते अज्झोववण्णे अण्णत्थ कत्थइ सुइं च

'मुच्छिए'त्ति, मूर्च्छितो-मूढो दोषेष्वपि गुणाध्यारोपात्, 'गिद्ध'त्ति, तदाकाङ्क्षावान्, 'गढिए'त्ति, ग्रथितस्तद्विषयस्नेहतन्तुसंदर्भितः 'अज्झोववन्ने'त्ति, आधिक्येन तदेकाग्रतां गतोऽध्युपपन्नः। अत एवान्यत्र कुत्रापि वस्त्वन्तरे 'सुइं च'त्ति, स्मृतिं स्मरणम्, 'रइं च'त्ति रतिं

ततस्तस्य मित्रस्य राज्ञोऽन्यदा कदाचित् श्रिया देव्या योनिशूलं प्रादुर्भूतं चाप्यभवत्। नो संशक्नोति विजयमित्रो राजा श्रिया देव्या सार्धमुदारान् मानुष्यकान् भोगभोगान् भुञ्जानो विहर्तुम्। ततः स विजयमित्रो राजाऽन्यदा कदाचिदुज्झितकं दारकं कामध्वजाया गणिकाया गेहाद् निष्कासयति, निष्कास्य कामध्वजां गणिकामभ्यन्तरे स्थापयति, स्थापयित्वा कामध्वजया गणिकया सार्धमुदारान् यावद् विहरति। ततः स उज्झितको दारकः कामध्वजाया गणिकाया गृहाद् निष्कास्यमानः सन् कामध्वजायां गणिकायां मूर्च्छितो गृद्धो ग्रथितोऽध्युपपन्नोऽन्यत्र कुत्रापि स्मृतिं च रतिं च धृतिं चाविन्दमानस्तच्चित्तस्तन्मनास्तल्लेश्यस्तदध्यवसानस्तदर्थोपयुक्तस्तदर्पितकरणस्तद्भावनाभावितः काम-

रतिं च धितिं च अविंदमाणे तच्चित्ते तम्मणे तल्लेसे तदज्झवसाणे तदट्ठोवउत्ते तयप्पियकरणे तब्भाव-णाभाविते कामज्झयाए गणियाए बहूणि अंतराणि य छिद्दाणि य विवराणि य पडिजागरमाणे २ विहरति।

तए णं से उज्झियए दारए अण्णया कयाति कामज्झयाए गणियाए अंतरं लभेति। कामज्झयाए गणि-याए गिहं रहस्सियगं अणुप्पविसइ २ त्ता, कामज्झयाए गणियाए सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं

आसक्तिम् 'धिइं च'त्ति, धृतिं च-चित्तस्वास्थ्यम्, 'अविंदमाणे'त्ति, अलभमानः 'तच्चित्ते'त्ति, तस्यामेव चित्तं भावमनः सामान्येन वा मनो यस्य स तथा, 'तम्मणे'त्ति द्रव्यमनः प्रतीत्य विशेषोपयोगं वा। 'तल्लेसे'त्ति, कामध्वजागताऽशुभात्मपरिणामविशेषः, लेश्या हि कृष्णादिद्रव्यसान्निध्यजनित आत्मपरिणाम इति, 'तदज्झवसाणे'त्ति, तस्यामेवाध्यवसानं भोगक्रियाप्रयत्नविशेषरूपं यस्य स तथा। 'तदट्ठोवउत्ते'त्ति, तदर्थं-तत्प्राप्तये उपयुक्तः-उपयोगवान् यः स तथा, 'तयप्पियकरणे'त्ति तस्यामेवार्पितानि-ढौकितानि करणानीन्द्रियाणि येन स तथा 'तब्भावणाभाविए'त्ति तद्भावनया कामध्वजाचिन्तया भावितो-वासितो यः स तथा कामध्वजाया गणिकाया बहुन्यन्तराणि न-राजगमनस्यान्तराणि 'छिद्दाणि य'त्ति छिद्राणि राजपरिवारविरलत्वानि 'विवराणि य'त्ति, शेषजनविरहान् 'पडिजागरमाणे'त्ति, गवे-

ध्वजाया गणिकाया बहून्यन्तराणि च च्छिद्राणि च विवराणि च प्रतिजागरन् २ विहरति।

ततः स उज्झितको दारकोऽन्यदा कदाचित् कामध्वजाया गणिकाया अन्तरं लभते। कामध्वजाया गणिकाया गृहं राहस्यिकमनु-प्रविशति, अनुप्रविश्य कामध्वजया गणिकया सार्धमुदारान् मानुष्यकान् भोगभोगान् भुञ्जानो विहरति। इतश्च मित्रो राजा स्नातो यावत्

भुंजमाणे विहरति। इमं च णं मित्ते राया ण्हाते जाव० पायच्छित्ते सव्वालंकारविभूसिते मणुस्सवग्गुरापरि-क्खित्ते जेणेव कामज्झयाए गणियाए गिहे तेणेव उवागच्छति २त्ता तत्थ णं उज्झिययं दारयं कामज्झ-याए गणियाए सद्धिं उरालाइं भोगभोगाइं जाव विहरमाणं पासति २ त्ता आसुरुत्ते ४ तिवलियभिउडिं निडाले साहट्टु उज्झिययं दारयं पुरिसेहिं गेण्हावेति। गेण्हावित्ता अट्ठिमुट्ठिजाणुकोप्परपहारसंभग्गमहि-

पयन्निति। 'इमं च णं'ति, इतश्चेत्यर्थः। 'ण्हाए' इत्यत्र यावत्करणादिदं दृश्यम्,—"कयबलिकम्मे" देवतानां विहितबलिविधानः "कय-कोउयमंगलपायच्छित्ते"त्ति कृतानि-विहितानि कौतुकानि च-मषिपुण्ड्रादीनि, मङ्गलानि च-सिद्धार्थकदध्यक्षतादीनि, प्रायश्चित्तानि च (नीव) दुःस्वप्नादिप्रतिघातहेतुत्वेनावश्यंकरणीयत्वाद् येन स तथा, 'मणुस्सवग्गुरापरिक्खित्ते'त्ति, मनुष्या वागुरेव मृगबन्धनमिव सर्वतो भवनात् तया परिक्षिप्तो यः स तथा। 'आसुरुत्ते'त्ति, आशु—शीघ्रं रुप्तः-क्रोधेन विमोहितो यः स आशुरुप्तः, आसुरं वा-असुरसत्कं कोपेन दारुणत्वाद् उक्तं भणितं यस्य स आसुरोक्तः। रुट्ठो-रोषवान्। "कुविए"त्ति मनसा कोपवान्, 'चंडिक्किए'त्ति, चाण्डिक्यितो-दारुणीभूतः। 'मिसिमिसीमाणे'त्ति, क्रोधज्वालया ज्वलन्। 'तिवलियभिउडिं निडाले साहट्टु'त्ति, त्रिवलिकां भृकुटिं

०प्रायश्चित्तः सर्वालंकारविभूषितो मनुष्यवागुरापरिक्षिप्तो यत्रैव कामध्वजाया गणिकाया गृहं तत्रैवोपागच्छति। उपागत्य तत्रोज्झितकं दारकं कामध्वजया गणिकया सार्धमुदारान् यावद् विहरमाणं पश्यति। दृष्ट्वाऽऽशुरुप्तः ४ त्रिवलीभृकुटिं ललाटे संहृत्योज्झितकं दारकं पुरुषैर्ग्रा-हयति। ग्राहयित्वाऽस्थिमुष्टिजानुकूर्परप्रहारसभग्नमथितगात्रं करोति। कृत्वाऽवकोटकबन्धनं करोति। कृत्वैतेन विधानेन वध्यमाज्ञापयति।

